श्रीशारदापीठशिष्यदण्डिस्वामि-
चन्द्रशेखराश्रमप्रकाशिता.

# यति संध्या.

संवत् १९८३ शाके १८४९

प्रत १०००

मूल्यम्-मुक्तस्थितिलाभः ॥

विवेकानंद मुद्रणालय न्युरोड खाडीया-अमदावाद.

श्रीशारदापीठशिष्यदण्डिस्वामि-
चन्द्रशेखराश्रमप्रकाशिता.

# यति संध्या.

संवत् १९८३ शाके १८४९

प्रत १०००

मूल्यम्–मुक्तस्थितिलाभः ॥

विवेकानंद मुद्रणालय न्युरोड खाडीया-अमदावाद.

# प्रस्तावना.

ॐ ( मुख्यतस्तु ) पाणिनीयशासनानुसारेण सम्
उपसर्गं पूर्वक ध्यै चिन्तायामितिधातोः संध्याशब्दःसमजनि ॥
तदर्थश्चसम्यक् ध्यायते सा संध्येति तच्चसम्यक् चिंतनं नाम
चेतसोऽखण्डैकाकारकत्वम् ॥ तच्चसाधकेनयुगपदसाध्यमिति
( एतदालम्बनंश्रेष्ठमिति ) मुण्डकोपनिषद्युक्त प्रणवात्मकसाल-
म्बब्रह्मणः स्थूलारुन्धतीन्यायेन प्रणवविषयकं यत्सम्यक्
चिंतनं तत्संध्येत्युच्यते गौण्यावृत्त्या ( इति मत्वा पूर्वाचार्यो-
क्तिःसमजनि तदुच्यते ) तच्च सुज्ञातमेवास्ति श्रीमद्भगवत्पूज्य-
पादीयाद्वैतसिद्धान्तावलम्बियतिवर्याणाम् ॥ तुर्याश्रमतुरीय-
पदानुभावकप्रणवविचारो हि शास्त्रविहितस्तस्य गूढत्वाच्च
करुणार्द्रहृदयैः सदयैः श्रीसुरेश्वराचार्यप्रभृतिभिः पूर्वाचार्यै-
रथर्ववेदीयगोपथब्राह्मणमाण्डूक्याद्युपनिषद्ग्रन्थानुसारेण यति
संध्यापञ्चीकरणादिप्रणिधानादिविधिना श्रेयोमार्गमुख्याधि-
कारिमस्करिव्यूहसुखकरबोधजनकमहानुग्रहोऽकारीति तस्यै-
वानुवादोमंदतरमतिना मया प्रकटीकृतस्तदेतद्धाष्टर्यं क्षन्त-
व्यमिति संप्रार्थं सर्वात्मानम् ॥

मोक्षस्यद्वारपाः प्रोक्ताः शमः संतोषएवच ॥
सुविचारः सदासंगः प्रापणीयामनीषिभिः ॥ १ ॥

इतिशम् ॥

तत्रादौ शिष्टाचारप्राप्ताचमनप्राणायामाः ॥
द्वादशप्रणवाभिर्मन्त्रितभस्मधारणञ्च ॥

## मङ्गलम् ॥

भिक्षूणां पटलं यत्र विश्रान्तिमगमत्सदा ॥ तत्रैपदं ब्रह्म-तत्वं ब्रह्ममात्रं करोतु माम् ॥ १ ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ २ ॥ सच्चिदानंदरूपाय कृष्णायाक्लिष्टकारिणे ॥ नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ ३ ॥

## भूशुद्धिः ॥

ॐ मं मण्डुकायनमः ॥ ॐ कं कालाग्निरुद्रायनमः ॥ ॐ कुं कूर्मायनमः ॥ ॐ आं आधारशक्त्यैनमः ॥ ॐ अं अनन्तायनमः ॥ ॐ पं पृथ्व्यैनमः ॥ पृथ्व्यामेरुपृष्ठऋषिः कूर्मोदेवता सुतलं छंदः आसने विनियोगः ॥ पृथ्वित्वयाधृतालोका देवि त्वं विष्णुनाधृता ॥ त्वञ्च धारयमां देवि पवित्रं कुरु चासनम् ॥ १ ॥

भूतशुद्धिः ॥

अपसर्पन्तु ये भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥ अपक्रामन्तुभूतानि पिशाचाः सर्वतोदिशम् ॥ सर्वेषामविरोधेन सन्ध्याकर्मसमारभे ॥ २ ॥ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्य मनुज्ञां दातुमर्हसि ॥ ३ ॥ शरीराकारभूतानां भूतानां यद्विशोधनम् ॥ अव्यक्तं भूतसंपर्कात्भूतशुद्धिरियंमता ॥४॥

प्राणप्रतिष्ठा ॥

शरीरमिन्द्रियाण्यात्मा पञ्चभूतानि सूक्ष्मता ॥ प्राणापानादिकं सर्वं महमेव चिदात्मकम् ॥ १ ॥

वन्दनम् ॥

हृदये हस्तं निधाय ब्रह्माद्यशेषगुरुपारंपर्येण यावत्स्वगुरुपादाम्वुजं तावत्प्रणौमीति शिरसि हस्तं निधाय ॥ ॐ नारायणाय नमः ॥ ॐ पद्मभवायनमः ॥ ॐ वसिष्ठायनमः ॥ ॐ शक्त्यैनमः ॥ ॐ पराशरायनमः ॥ ॐ व्यासायनमः ॥ ॐ शुकायनमः ॥ ॐ गौडपादाचार्येभ्योनमः ॥ ॐ गोविन्द भगवत्पूज्यपादाचार्येभ्योनमः ॥ ॐ श्री शङ्कराचार्येभ्योनमः ॥ ॐ विश्वरूपाचार्येभ्योनमः ॥ ॐ पद्मपादाचार्येभ्योनमः ॥

ॐ हस्तामलकाचार्येभ्योनमः ॥ ॐ त्रोटकाचार्येभ्योनमः ॥ ॐ समस्तब्रह्मविद्यासम्प्रदायप्रवर्तकाचार्येभ्योनमः ॥ ॐ गं गुरुभ्योनमः ॥ ॐ पं परमगुरुभ्योनमः ॥ ॐ पं परमेष्ठिगुरुभ्योनमः ॥ ॐ पं परात्परगुरुभ्योनमः ॥ ॐ वामस्कन्धे गंगणपतयेनमः ॥ ॐ दक्षिणस्कन्धे दं दुर्गायैनमः ॥ ॐ वामकुक्षौ क्षं क्षेत्रपालायनमः ॥ ॐ दक्षिणकुक्षौ सं सरस्वत्यैनमः ॥ ॐ पं परमात्मनेनमः नाभौ ॥ ॐ परब्रह्मणेनमः हृदये ॥

ततो हृदयकमलमध्ये सर्वतेजोमयं परब्रह्मस्वरूपं प्रणवं ध्यात्वा हृदयमालभेत ॥ षट्प्राणायामान् कृत्वा, प्रणवेन करशुद्धिं कुर्यात् ॥ प्रकोष्ठे मणिबंधेच कूर्परयोर्हस्तयोस्तले ॥ तत्पृष्ठेच-तदग्रे च करशुद्धिरुदाहृता ॥ १ ॥

न्यासाः ॥

ॐ भूरज्ञानात्मने तुषारवर्णायाङ्गुष्ठाभ्यांनमः ॥ ॐ भुवः प्राजापत्यात्मनेरक्तवर्णाय तर्जनीभ्यांनमः ॥ ॐ स्वः सूर्यात्मने श्यामवर्णायमध्यमाभ्यां नमः ॥ ॐ महः ब्रह्मात्मने नीलवर्णायानामिकाभ्यांनमः ॥ ॐ जनः ज्ञानात्मने कृष्णवर्णाय कनिष्ठिकाभ्यांनमः ॥ ॐ तपः सत्यात्मने श्वेतवर्णाय करतलकरपृष्ठाभ्यांनमः ॥ एवं हृदयादि ॥ ततोप्लुतोच्चारेणप्रणवेन हृदयमारभ्य शिरःप्रभृति पादाङ्गुष्ठपर्यन्तं त्रिवारं व्यापकं कुर्यात् ॥ ततस्ता-

लत्रयं कृत्वा वाणमुद्रया छोटिकात्रयञ्चविधाय प्रणवेन दिग्बंधः ॥ ॐ हंहमिति बीजेनाकाशप्राकारं विचिन्त्य यंयमिति वायुप्राकारं विचिन्त्य रंरमित्यग्निप्राकारंविचिन्त्य वंवमितिजलप्राकारं विचिन्त्य लंलमिति पृथ्वीप्राकारं विचिन्त्य कराग्रं ब्रह्मरन्ध्रे निधाय परमाकाशं विचिन्तयेत् ॥ स्फुरत्तारकसंकाशं विद्युत्पुञ्जसमप्रभम् ॥ हृदिस्थं परमं ध्यायेदोमितिज्योतिरूपकम् ॥ १ ॥ ॐ नमो नारायणायेत्यष्टवारंजपेत् ॥

## प्रणवविचारः ॥

ॐ पणवस्यान्तर्यामी ऋषिर्दैवी गायत्री च्छन्दः परमात्मा देवता लातव्यगोत्रोत्पन्नो ब्रह्मपुत्रकः श्वेतोवर्णः उदात्तस्वरः ज्ञानाग्निर्मुखं ॐ अं वीजं ॐ उं शक्तिः ॐ मं कीलकं मम मोक्षार्थंजपे विनियोगः ॥ ॐ अकारस्याग्निर्ऋषिर्दैवीगायत्री च्छन्दः ब्रह्मादेवता क्लींबीजं क्रियाशक्तिः पीतोवर्णः जाग्रदवस्था-भूःस्थानमुदात्तस्वरः ऋग्वेदोगार्हपत्योऽग्निः रजोगुणः प्रातः-सवनं विश्वात्मा पृथ्वीतत्वं सृष्टिक्रियाव्याप्त्यर्थे विनियोगः ॥ ॐ उकारस्यवायुर्ऋषिस्त्रिष्टुपूछन्दः विष्णुर्देवता श्रीबीजं ज्ञान-शक्तिः विद्युद्वर्णः स्वप्नावस्था भुवःस्थानमनुदात्तस्वरः यजुर्वेदो दक्षिणाग्निः सत्वगुणः माध्यन्दिनसवनं तैजसआत्मान्तरिक्षतत्वं

स्थितिक्रियोत्कर्षार्थे विनियोगः ॥ ॐ मकारस्य सूर्यऋषि जगतीच्छन्दः ईश्वरो देवता ह्रीं वीजं द्रव्यशक्तिः श्वेतोवर्णः सुषुप्त्यवस्था स्वःस्थानं स्वरितःस्वरः सामवेदः आहवनीयोऽग्निः तमोगुणः सायंसवनं प्राज्ञात्मा द्यौस्तत्वं संहारक्रियार्थे विनियोगः ॥ ॐ अर्धमात्रायाः वरुणऋषि विराट्छन्दः पुरुषो देवता क्लींवीजं विज्ञानशक्तिः सर्ववर्णाः तुरीयावस्था भूर्भुवः स्वःस्थानानि उदात्तानुदात्तस्वरितस्वराः अथर्ववेदोनादोवा-संवर्तकोऽग्निः सर्वगुणाः सर्वाणि सवनानि सर्व आत्मानः पृथ्व्यंतरिक्षदिवस्तत्वानि सृष्टिस्थितिसंहारक्रियार्थे विनियोगः ॥ ॐ ध्वनेर्ब्रह्मर्षिरव्यक्तगायत्रीच्छन्दः परमानन्दोदेवता हंसो वीजं चिच्छक्तिः नादःस्वरूपं ब्रह्मात्मास्वःस्थानं उन्मन्यवस्था ममभोक्षार्थंजपे विनियोगः ॥

## स्तवनम् ॥

ॐकारं निगमैक वेद्यमनिशं वेदान्ततत्वास्पदं चोत्पत्ति-स्थितिनाशहेतु ममलंविश्वस्यविश्वात्मकम् ॥ विश्वत्राणपरायणं श्रुतिशतैः संप्रोच्यमानं प्रभुं सत्यं ज्ञानमनंतमूर्तिममलं शुद्धा-त्मकं तंभजे ॥१॥ जगदङ्कुरकन्दाय सच्चिदानन्दमूर्तये ॥ गलि-ताखिलभेदायनमः शान्ताय विष्णवे ॥२॥ यद्बोधादिदं भाति

यद्बोधाद्धिनिवर्तते ॥ नमस्तस्मै परानन्दवपुषे परमात्मने ॥३॥ अविकाराय शुद्धायनित्याय परमात्मने ॥ नमः शुद्धस्वरूपाय विष्णवे प्रभविष्णवे ॥ ४ ॥ यद्ज्ञानप्रभावेण दृश्यते सकलंजगत् ॥ यद्ज्ञानाच्छ्रेय आप्नोति तस्मै ज्ञानात्मनेनमः ॥ ५ ॥ अनात्म-भूते देहादावात्मबुद्धिस्तुदेहिनाम् ॥ सा विद्या तत्कृतोबन्धस्त-न्नाशोमोक्ष उच्यते ॥ ६ ॥ बन्धमोक्षौ न विद्येते नित्यमुक्तस्य-चात्मनः ॥ ७ ॥

## पञ्चीकरणम् ॥

ॐ अथातः परमहंसानां समाधिविधिं व्याख्यास्यामः ॥ सच्छब्दवाच्यमविद्याशवलं ब्रह्म ब्रह्मणोऽव्यक्तमव्यक्तान्महन्मह-तोऽहंकाररहङ्कारात्पञ्चतन्मात्राणि पञ्चतन्मात्रेभ्योऽखिलंजगत्॥ पञ्चानां भूतानामेकैकं द्विधा समं विभज्य स्वस्वार्धभागं विहायेत-रेषु योजनात्पञ्चधापञ्चीकृतेषु पञ्चीकरणंभवति ॥ अध्यारो-पापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥ तत्र पञ्चीकृतपञ्चमहा-भूतानि तत्कार्यञ्च सर्वं विराडुच्यते ॥ एतत्स्थूलशरीरमात्मन-रिन्द्रियैरर्थोपलब्धिर्जागरितं तदुभयाभिमान्यात्मा विश्वमेतत्त्र-यमकारः अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यञ्चसप्तदशकं भौ-तिकं लिङ्गं हिरण्यगर्भ इत्युच्यते ॥

एतत्सूक्ष्मशरीरमात्मनःकरणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः स्वप्नस्तदुभयाभिमान्यात्मा तैजसः एतत्त्रयमुकारः शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमुच्यते एतत्कारण शरीरमात्मनस्तच्चनसन्नासन्नापि सदसन्नभिन्नं नाभिन्नं नापि भिन्नाभिन्नं कुतश्चिन्ननिरवयवं सावयवं नोभयं किन्तु केवलं ब्रह्मात्मैकत्वज्ञानापनोद्यं सर्वप्रकारकज्ञानोपसंहारं बुद्धेः कारणात्मनावस्थानं सुषुप्तिस्तदुभयाभिमान्यात्मा प्राज्ञः एतत्त्रयंमकारः ॥ अकारमुकारे उकारं मकारे मकारोऽहमेवात्मा साक्षी केवल चिन्मात्रस्वरूपोऽहं नाज्ञानं तत्कार्यञ्च किन्तुनित्यशुद्धबुद्धमुक्तस्वभावं परमानन्दाद्वयं प्रत्यगूभूतचैतन्यं परंब्रह्मैवाहमस्मि ॥ अहमेव परब्रह्मेत्यभेदेनावस्थानं समाधिः ॥ ॐ प्रज्ञानं ब्रह्म ॥ ॐ अहंब्रह्मास्मि ॥ ॐ तत्त्वमसि ॥ ॐ अयमात्माब्रह्मेत्यादि महावाक्येभ्योनित्यशः प्रणवात्मस्थमात्मज्योतिर्हृदिस्थितं चैतन्यमात्रममृतं सोहमस्मीतिभावयेत् ॥ तत्र कार्योपाधिश्चैतन्यं जीवशब्दवाच्यम् ॥ कारणोपाधिश्चैतन्यमीश्वरपदवाच्यम् ॥ उभयत्रचैतन्यमात्रंलक्ष्यम् ॥ लक्ष्यपदार्थग्रहणसामर्थ्येनाखण्डैकरसं ज्ञानंभवति ॥ कार्यकारणे परित्यज्ययल्लक्ष्यं शुद्धं तद्ब्रह्मोच्यते ॥ कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥ कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ १ ॥ इति श्रुतेः ॥

## मानसपूजाप्रकारः ॥

ॐ विष्णुं भास्वत्किरीटाङ्गदवलययुगाकल्पहारोदराङ्घ्रि श्रोणीभूषं सुवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम् ॥ हस्तोद्यच्छंखचक्रांबुजगदममलं पीतकौशेयवासोविद्युद्भाभासमानं दिनकरसदृशं पद्मसंस्थं नमामि ॥१॥ हृदयकमलमध्ये दीपवद्वेदसारं प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ॥ हरिगुरुशिवयोगं सर्वभूतस्थमेकं सकृदपि मनसा यश्चिन्तयेत्स्यात्म मुक्तः ॥ २ ॥ देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् ॥ सच्चिदानंदमद्वैतं परं ब्रह्मास्मि केवलम् ॥ ३ ॥ इति ध्यात्वा प्रणवयुक्तस्ववेदशाखान्तरगतानि महावाक्यानि पठेत् ॥

ॐ तत्वमसि श्वेतकेतो ॐ सर्वं खल्विदं ब्रह्मेति ॐ प्राणो ब्रह्म कंब्रह्म खं ब्रह्मेति ॐ योऽक्षिणि पुरुषो दृश्यते स आत्मेति ॥

हो वाचैतदभयममृतं ब्रह्मैतदिति ॐ तद्योऽहंसोऽसौ सोऽहमिति ॥ ततोऽष्टोत्तरशतजपपूर्वकप्राणायामत्रयंकुर्यात् ॥ तदनन्तरं जलमध्येऽष्टदलं प्रकृत्य तत्र ॐ नमो नारायणायेत्यष्टाक्षरमन्त्रंलिखेत् ॥ ततस्तन्मध्ये सपरिवारदेवमादित्यमंडलात्स्वहृदयाद्वा हरतद्वयाङ्गुष्ठाभ्यां प्रणवान्वितश्वासमार्गेण विष्णुमा-

वाह्य तद्यथा ॥ आगच्छ देवदेवेश शंखचक्रगदाधर ॥ गृह्णाणा-स्मत्कृतां पूजां चक्रेऽस्मिन्सन्निधोभव ॥ १ ॥ ततः शंखचक्र-गदाधेनुगरुडमुद्राप्रदर्शनम् ॥ दिव्यात्मने किरीटायनमः ॥ सर्वात्मने पटबन्धायनमः ॥ सावित्र्यात्मने तिलकायनमः ॥ शब्दादिविषयात्मने मकरकुण्डलायनमः ॥ पुरुषात्मने कौस्तु-भायनमः ॥ पञ्चभूतात्मने वनमालायैनमः ॥ दिगात्मने पीताम्ब-रायनमः ॥ मनोवेगात्मने चक्रायनमः ॥ अहंकारात्मने पाञ्च-जन्यायनमः ॥ आनन्दात्मने पद्मायनमः ॥ बुद्धितत्वात्मने कौमुदक्यैनमः ॥ इति नमस्कृत्य ॥

## पञ्चोपचारपूजनम् ॥

ॐ लं पृथ्वीगंधतन्मात्रप्रकृत्यानंदात्मपरमेश्वराय गन्धं परिकल्पयामि ॥ ॐ हं आकाशशब्दतन्मात्रप्रकृत्यानंदात्मपर-मेश्वराय पुष्पं परिकल्पयामि ॥ ॐ यं वायुस्पर्शतन्मात्रप्रकृत्या-नंदात्मपरमेश्वराय धूपं परिकल्पयामि ॥ ॐ रं अग्निरूपतन्मात्र-प्रकृत्यानंदात्मपरमेश्वराय दीपं परिकल्पयामि ॥ ॐ वं अमृत-रसतन्मात्रप्रकृत्यानंदात्मने परमेश्वराय नैवेद्यं परिकल्पयामि ॥ ॐ सं शक्तिसर्वतन्मात्रप्रकृत्यानंदात्मने परमेश्वराय पुष्पांजलिं परिकल्पयामि ॥ इति ॥

## तर्पणम् ॥

ॐ वमित्यमृतबीजेन धेनुमुद्रया जलेऽमृतरूपं ध्यात्वा प्रणवेन द्वादशवारमभिमंत्र्याष्टोत्तरशतवारञ्च तर्पयेत् ॥ ऋषींस्तर्पयामि ॥ छन्दांसि तर्पयामि ॥ देवतास्तर्पयामि ॥ हृदयदेवं तर्पयामि ॥ शिरोदेवं तर्पयामि ॥ शिखादेवं तर्पयामि ॥ कवचदेवं तर्पयामि ॥ नेत्रदेवं तर्पयामि ॥ अस्त्रदेवं तर्पयामि ॥

## अर्घ्यप्रदानम् ॥

ॐ आत्मैवेदंसर्वम् ॥ ॐ ब्रह्मैवेदं सर्वम् ॥ ॐ सर्वं खल्विदं ब्रह्मेति त्रिवारमञ्जलिं दद्यात् ॥

## उत्तरपूजनम् ॥

पूर्ववत्संपूज्य स्वहृदये सपरिवारदेवमुद्वासयेत् ॥ उत्तिष्ठोत्तिष्ठ देवेश पुनरागमनायच॥ प्रसीद त्वंमहेशान प्रविश्य हृदये मम ॥ १ ॥ दक्षिणहस्ते जलमादाय प्रणवेन द्वादशवारमभिमन्त्र्य वामकरे निक्षिप्य तद्गलितोदकेन शिरः संप्रोक्ष्य चाचम्य प्राणायामत्रयं कुर्यात् ॥ जलमादाय संकल्पः ॥ ॐ मनसा चिंतितं यन्मे वचसा भाषितं पुनः ॥ कायेन यत्कृतं कर्म सर्वं ब्रह्मार्पणं भवेदिति ॥ १ ॥

प्रणवोच्चारेणदण्डतर्पणम् ॥

द्वादशं दण्डमूलेतु दण्डाग्रेपि तथैवहि ॥ मुद्रायां द्वादशं प्रोक्तं प्रतिपर्वेत्रिधामतम् ॥ १ ॥ द्विधालोक्य च मध्येन मूले प्रोक्तं नवाङ्कितम् ॥ अग्रेसप्ताङ्कितं प्रोक्तमिति दण्डस्य तर्पणम् ॥ २ ॥ शिरःप्रोक्षण मग्रेण मूलेन पादप्रोक्षणम् ॥ सुरास्तिष्ठन्ति दण्डाग्रे दण्डमूलेतु पूर्वजाः ॥ ३ ॥ प्रतिग्रन्थितु गन्धर्वा मध्येतिष्ठन्तुमानवाः ॥ अस्माकं ये कुलेजाता नामगोत्रविवर्जिताः ॥ ४ ॥ ते सर्वे तृप्तिमायान्तु दण्डसंबंधिवारिणा ॥५॥ यस्यस्मृत्येतिसमाप्य दिक्पाल गुर्वादीश्च प्रणमेत् ॥ ततोभाष्यग्रंथानां श्रवणविधिना श्रवणादिकञ्चकुर्यात् ॥

तुरीयसंध्या ॥

ॐ अजपानामगायत्री योगिनां सिद्धिदामता ॥ हंसपदं महेशानि प्रत्यहं जपते नरः ॥ १ ॥ मोहाद्यो वै न जानाति मोक्षस्तस्यनविद्यते ॥ अजपां जपतो नित्यं पुनर्जन्मन विद्यते ॥ २ ॥ हकारेणवहिर्यान्तिं विशन्तश्चसकारतः ॥ चिन्तयेत्परमेशानि जीवन्तं पक्षिरूपिणम् ॥ ३ ॥ श्रीगुरोः कृपया देवि ज्ञायते जप्यते यदा ॥ उश्वास निश्वास तया बन्धमोक्षस्तदा भवेत् ॥ ४ ॥

## न्यासाः ॥

ॐ हं सं सूर्यायाङ्गुष्ठाभ्यांनमः ॥ ॐ हं सीं सोमाय-तर्जनीभ्यांनमः ॥ ॐ हं सूं निरञ्जनायमध्यमाभ्यांनमः ॥ ॐ हं सौं निराभासायानामिकाभ्यांनमः ॥ ॐ हं सैं अतनु-सूक्ष्मायकनिष्ठिकाभ्यांनमः ॥ ॐ हं सः अव्यक्तप्रबोधात्मने करतलपृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥

## ध्यानम् ॥

ॐ अस्य हंसस्य देवेशि निगमागमपक्षकौ ॥ उभावपि चाग्निसोमौ वक्षो हंसशिरोभवेत् ॥ १ ॥ बिन्दुस्त्रयंशिखानेत्रे मुखं नादः प्रकीर्तितः ॥ शिवशक्ती पदद्वंद्वं कालाग्नि पार्श्वयुग्म-कम् ॥ २ ॥ हंसःपरमहंसोऽयं सर्वं व्यापी प्रकाशवान् ॥ सूर्य कोटी प्रकाशश्च स्वप्रकाशेनभासते ॥ ३ ॥ ततो यथाशक्ति हंसमंत्रंप्रजप्य समष्टिव्यष्टिक्रमेण

## जपनिवेदनम् ॥

ॐ गतारुणोदयादागाम्यरुणोदयपर्यन्तं बहुश्वासानुसार-कृतषट्शताधिकैकविंशतिसहस्राजपाजपेन गणेशब्रह्मविष्णुमहे-शजीवपरमात्मगुरवः प्रीयन्ताम् ॥ चतुर्दले मूलाधारे षट्

शतेन साङ्गोपावरणः सायुधः स शक्तिकः सवाहनः श्रीगणेशः प्रीयताम् ॥ षड्दले स्वाधिष्ठाने सहस्रषट्केन० ब्रह्माप्रीयताम् ॥ दशदले मणिपूरके सहस्रषट्केन० विष्णुः प्रीयताम् ॥ द्वादशदलेऽनाहतचक्रे सहस्रषट्केन० महेशः प्रीयताम् ॥ षोडशदले विशुद्धौ सहस्रेण० जीवात्मा प्रीयताम् ॥ द्विदलात्मकाज्ञाचक्रे सहस्रेण० परमात्मा प्रीयताम् ॥ सहस्रदले ब्रह्मरन्ध्रे सहस्रेण० सद्गुरुः प्रीयताम् ॥ गुह्यातिगुह्यगोप्त्रि त्वं गृहाणास्मत्कृतंजपम् ॥ सिद्धिर्भवतुमेदेविस्वत्प्रसादान्महेश्वरि ॥ १ ॥

त्रैलोक्यचैतन्यमयीश्वरेश्वरिः श्रीसुन्दरि त्वच्चरणाज्ञयैव ॥ प्रातः समुत्थाय तव प्रीयार्थं संसारयात्रामनुवर्तयिष्ये ॥ २ ॥

एवं सन्ध्योपासनं विधायान्ते स्वाधिकारानुरूपप्रणवजपं प्रकुर्वीत ॥ तथा चोक्तम् ॥ जपेद्द्वादशसाहस्रं प्रणवस्य प्रयत्नतः ॥ सहस्रं श्रवणार्थी तु योगाभ्यासीशतंजपेत् ॥ १ ॥ निर्विकल्पसमाधिस्तु न जपेत्किञ्चिदद्वयात् ॥

जपनिवेदनमंत्रः ॥

पुण्डरीकाक्षविश्वात्मन् मंत्रमूर्ते जनार्दन ॥ गृहाणेमंजपंनाथममदीनस्य शाश्वत ॥ १ ॥

इति विश्वेश्वरसरस्वतिविरचितयतिधर्मसंग्रहे ॥

पारिव्राज्यधर्मवन्तो यज्ज्ञानाद्ब्रह्मतां ययुः ॥ तद्ब्रह्मप्रणवैकार्थतुर्यतुर्यहरिं भजे ॥ १ ॥

ॐ तत्सत् ॥

संकीर्णविषयाः ॥

प्रातरुत्थाय वेदान्तस्तोत्रपठनपूर्वकं तीर्थादौ स्नात्वा सन्ध्योपासनं प्रकुर्वीत ॥

दण्डप्रकाराः ॥

षड्भिः सुदर्शनं प्रोक्तं नारायणमथाष्टकैः ॥ वासुदेवं द्वादशभिर्गोपालं दशभिस्तथा ॥ १ ॥ चतुर्दशभिश्चानन्तमतऊर्ध्वेन धारयेत् ॥ षड्भिर्ग्रन्थिभिरित्यादि ज्ञेयम् ॥

दण्डपतनग्रहणमन्त्राः ॥

उत्तिष्ठोत्तिष्ठ भगवन्नारायण जगत्पते ॥ दण्डरूपिन् महाविष्णो प्रसीद पुरुषोत्तम ॥ १ ॥ मातृपितृसमो दण्डो भ्रातरो गुरवस्तथा ॥ पथिसाधनहेतुश्च ब्रह्मसुद्धे नमोऽस्तुते ॥ २ ॥ विष्णुहस्ते यथा चक्रं शूलं शिवकरे यथा ॥ इन्द्रहस्ते यथावज्रं तथा दण्डो ममाग्रमे ॥ ३ ॥

दण्डग्रहणमन्त्रः ॥

उत्तिष्ठोत्तिष्ठ देवेश देवानां हितकाम्यया ॥ देवस्यारिविनाशाय सदा मम करे भव ॥ १ ॥

स्थापनमन्त्रः ॥

तिष्ठत्वं देवदेवेश तिष्ठत्वं दण्डदैवत ॥ ऋषिभिर्मुनिभिश्चैव गन्धर्वैश्च समं सदा ॥ १ ॥

कमण्डलुशुद्ध्यादिकम् ॥

यतेश्चत्वारि पात्राणि मृद्वेणुदार्वलाम्बुमयानि ॥

जलाग्निश्च कराग्निश्च महाग्निश्चैव संनिधौ ॥ अग्नित्रयप्रभावेण शुद्धोभव कमण्डलो ॥ १ ॥ कमण्डलो महातीर्थपुण्योदकपरायण ॥ अगस्त्यादि मुनिश्रेष्ठै धृतोऽसि त्वं कमण्डलो ॥ स्नानसन्ध्यादि कृत्येषु त्वमेकः साधनं मम ॥ २ ॥

काषायकरणविधिः ॥

तत्रादौ द्रवीकृतगैरिकमध्ये पट्टदलं विधाय तन्मध्ये ॐ ह्रें क्लीं हुं फट् इति षडाक्षरमन्त्रमुल्लिख्य ॥ मेरुगर्भसमुद्भूते गैरिकेवह्निरूपिणि ॥ त्वया रञ्जित वस्त्रेण योगसिद्धिं तु मे कुरु ॥ १ ॥

## यतिक्षौरविधिः ॥

मासे मासे गृहस्थस्य पक्षेपक्षे च यज्वनाम् ॥ ऋत्वन्ते मस्करिणां च यथेच्छं ब्रह्मचारिणाम् ॥ १ ॥ यदा ह्यधिक मासःस्यात्तदाक्षौरद्वयं भवेत् ॥ मासद्वयेन प्रथमं मासेनैकेन-चापरम् ॥ २ ॥ मासत्रयेणैकंवाऋतुश्चैव भवेद्यतः ॥ एवं क्षौर-द्वयं कार्यमितिशास्त्रस्यनिर्णयः ॥ ३ ॥ त्रिमुहूर्ताधिका ग्राह्या पौर्णमासीप्रमाणतः ॥ कनिष्ठादि प्रकुर्वीत पर्वक्षौरं विचारतः॥४॥

यतिमस्तके रक्तश्रावश्चेद्द्विगुणप्राणायामान् कुर्यात् ॥ मध्ये पुरीषादिकं चेद्द्विगुण शौचमाचरेत् ॥ तत्रादौ कृत-नित्यकर्मा परशुमुद्राबन्धनपूर्वकं दिक्पालगुरुज्येष्ठादिवन्दन-माचरेत् ॥ विशेषतो गुरुं प्रार्थयेत् ॥ क्षौराद्यर्थं प्रार्थयामि त्वद्यपर्वण्यहं प्रभो ॥ अनुज्ञां देहि मां तात गमिष्यामि हिताय वै ॥ १ ॥

गुरुरुवाच ॥ गच्छ तात स्वकार्यार्थं सादरं भक्तिपूर्वकम् ॥ तद्योगसिद्धि मामुहि तद्विष्णोः परमंपदम् ॥ १ ॥ हस्त-पादादिप्रक्षालनपूर्वकमाचमनप्राणायामत्रयञ्च कृत्वा प्रणवेन क्षौरभूमिं संप्रोक्ष्य तत्र पत्रावलिं निधायाष्टदलं लिखेत् ॥ ततो धेनुमुद्राप्रदर्शनम् ॥ नापिकस्य हस्तौ द्वादशवारं प्रक्षालयित्वा

क्षौरोपयोगिशस्त्राणि संशोध्य सूर्याय दर्शयित्वा च पात्रो परि संस्थाप्य ॥ स्वशिर आ कृत्वा ॥ मेरुमण्डलतुल्यानि पातकानि महान्त्यपि ॥ केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥ १ ॥ इति मन्त्रेण स्वहस्तेन क्षौरसंस्कारमाचरेत् ॥ दक्षिणवामभागे जलपूरितत्रिद्रोणान्निधाय तन्मध्येऽङ्गुलीर्दद्यात् ॥ मौनेनक्षौरम् ॥ ततस्तीर्थगमनम् ॥ तत्र गर्तं विधाय केशादीन्निक्षिपेत् ॥ पश्चाज्जले द्वादशवारं निमज्ज्य तीरमासाद्य नारिकेलसमं मृत्पिण्डमादायाष्टधा विभज्य प्रत्येकभागं मूलमंत्रेण द्वादशवारमभिमन्त्र्य सूर्याय दर्शयित्वा क्रमेण मृद्विभागेन हस्तपादमस्तकमुखवाहुकमण्डलुवासः कौपिनानि क्षालयेत् ॥ पुनश्च बिल्वमानपिंडमादायभागत्रयं कृत्वा द्वयेन कक्षाद्वयं विशोध्य शेषं विसृजेत् ॥ पुनस्त्रिवारं जले निमज्ज्य तीरमासाद्य षोडशगंडूशान्षोडशप्राणायामांश्च विधाय किञ्चित्प्रणवजपपूर्वकदण्डकमंडलुसहितं स्नात्या धौते वाससी परिधाय माध्याह्निकं कृत्वा मठे गच्छेत् ॥ गुरुवन्दनम् ॥ भो भो स्वामिन्दयासिन्धो प्रार्थयिष्यामि तेऽधुना ॥ पर्वण्यादिनमस्कारे चानुज्ञां दातुमर्हसि ॥ १ ॥ क्षौरकर्मतु यन्न्यूनं परिपूर्णं तदस्तु मे ॥ आचारहीनोऽहं देव यथावच्छाधि मां प्रभो ॥ २ ॥ वाङ्मनःकायसंभूतानपराधान्क्षमस्व मे ॥ सर्वेऽपराधाःक्षन्तव्याः-

शिक्षितव्यं पुनःपुनः ॥ ३ ॥ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥ दासोऽयमितिमां मत्वा क्षमस्व पुरुषोत्तम ॥ ४ ॥ गुरुरुवाच ॥ सुखेन वर्ततां धर्मे चित्ते ब्रह्म विचिन्तय ॥ इति क्षौरविधिः ॥

## भिक्षाप्रकरणम् ॥

माधुकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ॥ तात्कालिकञ्चोपपन्नं भैक्षं पञ्चविधंस्मृतम् ॥ १ ॥ नामगोत्रादिचरणं देशङ्कालं श्रुतं कुलम् ॥ शीलं वृत्तं वयः पूर्वंख्यापयेन्नैव सद्गतिः ॥ २ ॥ प्रवासी यदि सन्यासी रात्रौ भुजन्नदुष्यति ॥ दिवायदि न भुक्तं चेन्नायंदोषः प्रकीर्तितः ॥ ३ ॥ ब्रह्मक्षत्रियवैश्यानां मेध्यानां भैक्षमाचरेत् ॥ द्विजाभावेतुसंप्राप्ते उपवासत्रयेगते ॥ ४ ॥ फलं शूद्रादपि ग्राह्यं प्राणं रक्षेत्सदायतिः ॥ यावदुदरपूर्तिःस्यात्तावद्भैक्षंसमाचरेत् ॥ ५ ॥ पितुरब्दंतुचाशौचंतदर्धंमातृपुत्रयोः ॥ सपिंडानान्तुसर्वेषां मासमेकं विवर्जयेत् ॥ ६ ॥ मासत्रयंतुभार्यायां मासैक्यं पुत्रजन्मनि ॥ चत्वारिंशद्दिनं त्याज्यं कन्याजन्म हि यद्गृहे ॥७॥ महिषी गौश्च मांजारी शुनी वाजा प्रसूतिका ॥ दशरात्रं न गृह्णीयाद्भिक्षां तस्य गृहे यतिः ॥ ८ ॥ इष्टयन्ननैव भोक्तव्यं संस्कारान्नं तथैवच ॥ भिक्षातत्रनकर्तव्या

यत्रक्षौरविधिर्गृहे ॥ ९ ॥ वैश्वदेवस्य यःकर्ता तस्यभार्या रजस्वला ॥ तत्रभिक्षानकर्तव्या भिक्षुणा हितमिच्छता ॥ १० ॥ श्राद्धान्ननैवगृह्णीयाद्यदिभक्षणमागतम् ॥ कुक्षौ स्थितं यावदन्नं तावत्प्रेतत्वमाप्नुयात् ॥ ११ ॥ अयने विषुवे चैव चंद्रादित्योपरागयोः ॥ भुक्त्वंदृष्ट्वानभोक्तव्यं स्नानं कृत्वा ततःपरम् ॥१२॥ अर्धोदये च सिंहस्थे कपिलाषष्ठीपर्वणि ॥ यतिभिश्चापिकर्तव्य मनशनंवाप्युपोषणम् ॥ १३ ॥ उपवासः प्रकर्तव्यः क्षौर पर्वदिनेतथा ॥

श्रेष्ठांमाधुकरीं भिक्षां तामिच्छेच्चसदायतिः ॥ मधुवदाहरणंयत्तन्माधुकरमिति स्मृतम् ॥ १५ ॥ गच्छेत्संकल्परहितान्गृहांस्त्रीन्पञ्चसप्तवा ॥ संस्कृत्य प्रणवेनाथ भिक्षापात्रंयथाविधि ॥ १६ ॥ भास्कराभिमुखोभूत्वासंस्मरन्मनसाहरिम् ॥ सव्येनादाय पात्रं तु दण्डंवै दक्षिणे न तु ॥ १७ ॥ यतिहस्ते जलंदद्याद्भिक्षां दद्यात्पुनर्जलम् ॥ तदन्नंमेरुना तुल्यं तज्जलं सागरोपमम् ॥ १ ॥ यस्यगृहे यतिर्भुङ्क्ते तस्यगृहे हरिःस्वयम ॥ यस्यगृहे हरिर्भुङ्क्ते तस्य गृहे जगत्त्रयम् ॥ २ ॥ इति मंडल पूजामंत्रौ भिक्षानन्तरं पुराणश्रवणेनशेषंकालंनयेत् ॥ इति संक्षेपनिर्वाहः ॥

## मठाम्नायमीमांसा ॥

प्रथमःपश्चिमाम्नायः शारदामठउच्यते ॥ कीटवारः संप्रदायस्तस्यतीर्थाश्रमौ शुभौ ॥१ ॥ द्वारकाख्यं हि क्षेत्रं स्याद्देवः सिद्धेश्वरः स्मृतः ॥ भद्रकाली तु देवी स्यादाचार्यो विश्वरूपकः ॥ २ ॥ गोमती तीर्थममलं ब्रह्मचारी स्वरूपकः ॥ सामवेदस्य वक्ताच तत्र धर्मं समाचरेत् ॥ ३ ॥ पूर्वाम्नायो द्वितीयः स्याद्गोवर्धनमठःस्मृतः ॥ भोगवारः संप्रदायो वनाऽरण्ये पदे स्मृते ॥ ४ ॥ पुरुषोत्तमं तु क्षेत्रंस्याद्जगन्नाथोऽस्य देवता ॥ विमलाख्याहि देवीस्यादाचार्यः पद्मपादकः ॥ ५ ॥ तीर्थं महोदधिः प्रोक्तं ब्रह्मचारीप्रकाशकः ॥ ऋगाह्वयस्तस्यवेदस्तत्र धर्मं समाचरेत् ॥ ६ ॥ तृतीयस्तू त्तराम्नायो ज्योतिष्मान्हि मठोभवेत् ॥ आनंदवारोऽस्य विज्ञेयः संप्रदायोऽस्य सिद्धिकृत् ॥ ७ ॥ पदानि तस्य ख्यातानि गिरिपर्वतसागराः ॥ बदरीकाश्रमं क्षेत्रंदेवताचसएवहि ॥ ८ ॥ देवीपुन्नागिरीज्ञेया आचार्यस्त्रोटकः स्मृतः ॥ तीर्थं त्वलकनन्दाख्यं नन्दाख्योब्रह्मचार्यभूत् ॥ तस्यवेदोह्यथर्वाख्यस्तत्र धर्मं समाचरेत् ॥ ९ ॥ चतुर्थो दक्षिणाम्नायःशृगेरी तु मठो भवेत् ॥ भूरीवाराह्वयस्तस्य संप्रदायः सुशोभनः ॥ १० ॥ पदानि तस्य ख्यातानि सरस्वती भारतीपुरी ॥ रामेश्वराह्वयं-

क्षेत्रमादिवाराहदेवता ॥ ११ ॥ कामाक्षीतस्यदेवी स्यात्सर्व-
कामफलप्रदा ॥ पृथ्वीधराह्व आचार्यस्तुंगभद्रेति तीर्थकम् ॥
चैतन्याख्यो ब्रह्मचारी यजुर्वेदस्यपाठकः ॥ १२ ॥

एवमेव प्रतिदिनं प्रातरुत्थाय पूर्ववत्क्रमोविज्ञेयः ॥

॥ ॐ कं खं ब्रह्म ॥

शाङ्करमठसंप्रदायोयाः शान्तयः

श्रीचिन्तामणि गणपतयेनमः विश्वेशं माधवं ढुण्ढिं दंड
पाणिं च भैरवम् ॥ वन्दे काशीं गुहां गंगां भवानीं मणि-
कर्णिकाम् ॥ १ ॥

स्मृते सकल कल्याण भाजनं यत्र जायते ॥ पुरुषस्तमजं
नित्यं व्रजामि शरणं हरिम् ॥ २ ॥

ॐ शन्नोमित्रः शंवरुणः ॥ शन्नो भवत्वर्यमा ॥ शन्नइन्द्रो
बृहस्पतिः ॥ शन्नोविष्णुरुरुक्रमः ॥ नमोब्रह्मणे ॥ नमस्तेवायो
॥ त्वमेव प्रत्यक्षं ब्रह्मासि ॥ त्वमेवप्रत्यक्षं ब्रह्मवदिष्यामि ॥
ऋतंवदिष्यामि ॥ सत्यंवदिष्यामि ॥ तन्मामवतु ॥ तद्वक्तार
मवतु ॥ अवतुमां ॥ अवतुवक्तारम् ॥ ॐ शान्तिः शान्तिः
शान्तिः ॥ १ ॥

ॐ सहनाववतु ॥ सहनौभुनक्तु ॥ सहवीर्यं करवावहै ॥
तेजस्विनावधीतमस्तु ॥ माविद्विषावहै ॥ ॐ शान्तिः शान्तिः
शान्तिः ॥ २ ॥

ॐ यश्छन्दसामृषभो विश्वरूपः छन्दोभ्योऽध्यमृतात्सं-
वभूवसमेन्द्रोमेधया स्पृणोतु ॥ अमृतस्यदेव धारणो भूयासम् ॥
शरीरं मेविचर्षणम् ॥ जिह्वामेमधुमत्तमा ॥ कर्णाभ्यां भूरिवि-
श्रुवम् ॥ ब्रह्मणः कोशोऽसिमेधयापिहितः ॥ श्रुतंमेगोपाय ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ३ ॥

ॐ अहं वृक्षस्यरेरिव ॥ कीर्तिः पृष्ठं गिरेरिव ॥ ऊर्ध्व
पवित्रो वाजिनीव स्वमृतमस्मि ॥ द्रविणं सवर्चसम् ॥ सुमेधा
अमृतो क्षितः ॥ इति त्रिशङ्कोर्वेदानुवचनम् ॥ ॐ शान्तिः
शान्तिः शान्तिः ॥ ४ ॥

ॐ पूर्णमदः पूर्णमिदंपूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्ण-
मादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥५॥

ॐ आप्यायन्तुममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो वल
मिन्द्रियाणिच सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां
मामा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु ॥
तदात्मनि निरतेय उपनिषत्सु धर्मास्ते मयिसन्तुतेमयि सन्तु ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ६ ॥

ॐ वाङ्मेमनसिप्रतिष्ठितामनोमेवाचि प्रतिष्ठितमावीरा-
वीर्म एधिवेदस्य म आणीस्थः श्रुतं मे माप्रहासीरनेनाधीतेना
होरात्रात्संदधाम्यृतं वदिष्यामि ॥ सत्यं वदिष्यामि ॥ तन्मा-

मवतुतद्वक्तारमवतु ॥ अवतुमामवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ७ ॥

ॐ भद्रंनो अपिवातय मनः ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ८ ॥

ॐ भद्रंकर्णेभिः शणृयामदेवाः भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाँसस्तनु भिर्व्यशेम देवहितंयदायुः ॥

स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्ति नस्तारक्षो अरिष्टनेमिः स्वस्तिनो बृहस्पतिं र्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ९ ॥

ॐ यो ब्रह्माणं विदधाति पूर्वं योवै वेदाँश्च प्रहिणोति तस्मै ॥ तँह देव मात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ १० ॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्या संप्रदायकर्तृभ्यो वंश-ऋषिभ्यो महद्भ्यो नमोगुरुभ्यः ॥ सर्वोपप्लवरहितः प्रज्ञान घनः प्रत्यगर्थो ब्रह्मैवाहमस्मि ॥ ११ ॥

ॐ नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ॥

व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्र मथास्य शिष्यम् ॥ १ ॥

श्री शंकराचार्य मथास्य पद्मपादं च हस्तामलकं च

शिष्यम् ॥ तं त्रोटकं वार्निककारमन्यानस्मगुरून्संनन मानतोऽस्मि ॥ २ ॥

श्रुति स्मृति पुराणानाभालयं करुणालयम् ॥ नमामि भगवत्पादं शंकरं लोकशंकरम् ॥ ३ ॥

शंकरं शंकराचार्यं केशवं बादरायणम् ॥ सूत्र भाष्यकृतौ वन्दे भगवन्तौ पुनःपुनः ॥ ४ ॥

ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ॥ व्योमवद्व्याप्त-देहाय दक्षिणामूर्तयेनमः ॥ ५ ॥

वेदान्तार्थविभासकाय गुरवे शान्ताय सन्यासिने नाना वादि नगेन्द्र संघ पवये योगीन्द्र वंद्यायच ॥ मोह ध्वान्तदिवा-कराय भगवत्पादाभिधां बिभ्रते तस्मै भाष्यकृते नमोऽस्तु सततं पूर्णाय बोधात्मने ॥ ६ ॥

## अनध्याय मंगल शान्तिः ॥

अशुभानि निराचष्टे तनोति शुभ संततिम् ॥
स्मृति मात्रेण यत्पुसां ब्रह्मतन्मंगलं परम् ॥ १ ॥
अति कल्याणरूपत्वान्नित्य कल्याण संश्रयात् ॥
स्मतॄणां वरदत्वाच्च ब्रह्म तन्मंगलंविदुः ॥ २ ॥
ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥
कंठंभित्वा विनिर्यातौ तस्मान्मांगलिकावुभौ ॥ ३ ॥
॥ ॐ अथ ॐ अथ ॐ अथ तत्सत्परब्रह्मार्पणमस्तु ॥

